सके ।२१। ऋणम् ॥ **कार्षापणादीनि नपुंसके च** ।२२। चात्पुंसि ॥ **थोपधः** ।२३। अदन्तः पुंसि । रथः । यूथः ॥ **नोपधः** ।२४। अदन्तः पुंसि । इनः । फेनः । **जघनादीनि नपुंसके** ।२५। जघनम् ॥ **पोपधः** ।२६। अदन्तः पुंसि । दीपः । सर्पः ॥ **पापादीनि नपुंसके** ।२७। पापम् ॥ **शूर्पकुतपकुणपद्वीपविटपानि नपुंसके च** ।२८। चात्पुंसि ॥ **भोपधः** ।२९। कुम्भः । सरभः ॥ **तलभं नपुंसकम्** ।३०। **जृंभन्नपुंसके च** ।३१। **मोपधः** ।३२। होमः । धर्मः ॥ **रुक्मादीनि नपुंसके** ।३३। इदं रुक्ममित्यादि ॥ **संग्रामादीनि नपुंसके च** ।३४। चात्पुंसि । संग्रामः । संग्रामम् ॥ **योपधः** ।३५। हयः । समयः ॥ **किसलयादीनि नपुंसके** ।३६। **गोमयादीनि नपुंसके च** ।३७। **रोपधः** ।३८। क्षुरः । खुरः । अङ्कुरः ॥ **द्वारादीनि नपुंसके** ।३९। इदं द्वारम् ॥ **शुक्रमदेवतायाम्** ।४०। देवतायां तु शुक्रः ॥ **षोपधः** ।४१। वृषः । वृक्षः ॥ **शिरीषादीनि नपुंसके** ।४२। इदं शिरीषम् ॥ **सोपधः** ।४३। वायसः । महानसः ॥ **पनसबिसबुससाहसानि नपुंसके** ।४४। **चमसादीनि नपुंसके च** ।४५। चात्पुंसि ॥ **कंसं चाप्राणिनि** ।४६। कंसः ॥ **कंसं वा पानपात्रम्** ।४७। प्राणिनि तु कंस औग्रसेनिः ॥ **रश्मिदिवाभिधानानि** ।४८। अत इति निवृत्तम् ॥ **दीधितिः स्त्रियाम्** ।४९। **दिनाहनी नपुंसके** ।५०। दिनं अहः ॥ **मानाभिधानानि** ।५१। कुडवः ॥ **द्रोणाढकौ नपुंसके च** ।५२। चात्पुंसि ॥ **खारीमानिके स्त्रियाम्** ।५३। इयं खारिः ॥ **दाराक्षतलाजासूनां बहुत्वं च** ।५४। इमे दाराः ॥ **मरुद्गरुत्तरदृत्विजः** ।५५। अयं मरुत् ॥ **ध्वजगजमुञ्जपुञ्जाः** ।५६। एते पुंसि ॥ **वंशांशपुरोडाशाः** ।५७। अयं वंशः ॥ **ह्रदकन्दकुन्दबुद्बुदशब्दाः** ।५८। अयं ह्रदः ॥ **अर्घपथिमथ्यृभुक्षिस्तम्बनितम्बपूगाः** ।५९। अयमर्घः ॥ **सारथ्यतिथिकुक्षिवस्तिपाण्यञ्जलयः** ।६०। **पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्गगन्धस्कन्धमृदङ्गसङ्गसमुद्रपुङ्खाः** ।६१। अयं पल्लव इत्यादि ॥ **ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिबलिकौलिमौलिरविकविकपिमुनयः** ।६२।

एते पुंसि स्युः । अयमृषिः ॥ **हस्तकुन्तान्तव्रातवातदूतधूर्तसूतचूतमुहूर्ताः** ।६३। एते पुंसि । अयं हस्त इत्यादि । इति पुंलिङ्गाधिकारः ॥

**नपुंसकम्** । अयमधिकारः ॥ **भावे ल्युडन्तः** ।१। ज्ञानम् । हसनम् । भावे किम् । पचनः ॥ **निष्ठा च** ।२। भावे या निष्ठा तदन्तं क्लीबं स्यात् । गीतम् ॥ **त्वष्यञौ तद्धितौ** ।३। शुक्लत्वम् । शौक्ल्यम् । षित्वसामर्थ्यात्पक्षे स्त्रीत्वे ङीष् । चातुरी ॥ **कर्मणि च ब्राह्मणादिगुणवचनेभ्यः** ।४। ब्राह्मण्यम् ॥ **यद्यढग्यगञण्वुञ्छाश्च भावकर्मणि** ।५। एतानि क्लीबानि । स्तेयम् । सख्यम् । कापेयम् । सैनापत्यम् । औष्ट्रम् । द्वैहायनम् । पितापुत्रकम् । अच्छावाकीयम् ॥ **अव्ययीभावः** ।६। अधिहरि ॥ **द्वन्द्वैकत्वम्** ।७। पाणिपादम् ॥ **अनल्पे छाया** ।८। शरच्छायम् ॥ **इसुसन्तः** ।९। हविः । सर्पिः । धनुः ॥ **अर्चिः स्त्रियां च** ।१०। इदमिनं वार्चिः ॥ **छदिः स्त्रियामेव** ।११। इयं छदिः ॥ **मुखनयनलोहवनमांसरुधिरकार्मुकविवरजलहलधनान्नाभिधानानि** ।१२। एषामभिधायकानि क्लीबे स्युः । मुखमाननं वक्रम् इत्यादि ॥ **सीरार्थौदनाः पुंसि** ।१३। **वक्रनेत्रारण्यगाण्डीवानि पुंसि च** ।१४। चात् क्लीबे ॥ **अटवी स्त्रियाम्** ।१५। पूर्वस्येयं त्रिसूत्री बाधिका ॥ **लोपधः** ।१६। कुशलम् ॥ **शीलादीनि पुंसि च** ।१७। चात् क्लीबे । शीलम् ॥ **शतादिः संख्या** ।१८। शतम् । सहस्रम् ॥ **शतायुतप्रयुताः पुंसि च** ।१९। **लक्षाकोटिः स्त्रियाम्** ।२०। इयं लक्षा ॥ **सहस्रः पुंसि** ।२१। **मन् द्व्यच्कोऽकर्तरि** ।२२। मन्प्रत्ययान्तो द्व्यच्कः पुंसि स्यात् चात् क्लीबे नतु कर्तरि । वर्मा । वर्म । अकर्तरि किम् । ददातीति दामा ॥ **ब्रह्मन्पुंसि च** ।२३। अयं ब्रह्मा । इदं ब्रह्म ॥ **सामरोमणी क्लीबे** ।२४। पूर्वस्यापवादः ॥ **असन्तो द्व्यच्कः** ।२५। यशः । मनः । तपः । अप्सराः ॥ **स्त्रियाम्** ।२६। एता अप्सरसः ॥ **त्रन्नन्तः** ।२७। पत्रम् । छत्रम् ॥ **यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव** ।२८। इति नपुंसकाधिकारः ॥

**स्त्रीपुंसयोः** ।१। अयमधिकारः ॥ **गोमणियष्टिमुष्टिपाटलिबस्तिशाल्मलित्रुटिमसिमरीचयः** ।२। इयमयं वा गौः ॥ **अपत्यार्थतद्धिते** ।३। औपगवः । औपगवी । इति स्त्रीपुंसाधिकारः ॥

**पुंनपुंसकयोः** । अधिकारोयम् ॥ **घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकबुस्तलोहिताः** ।१। अयं घृतः । इदं घृतम् । **कबन्धौषधायुधान्ताः** ।२। स्पष्टम् । **दण्डमण्डखण्डशवसैंधवपार्श्वकाशाङ्कुशकुलिशाः** ।३। दण्डः । दण्डम् ॥ इति पुंनपुंसकाधिकारः ॥

**अव्ययमवशिष्टलिङ्गम्** ।१। **कतियुष्मदस्मदः** ।२। **ष्णान्ता संख्या** । **शिष्टा परवत्** ।३। एकः पुरुषः । एका स्त्री । एकं कुलम् ॥ **गुणवचनम्** ।४। शुक्लः पटः ॥ शुक्ला पटी । शुक्लं वस्त्रम् ॥ **कृत्याश्च** ।५। **करणाधिकरणयोर्ल्युट् च** ।६। **सर्वादीनि सर्वनामानि** ।७। स्पष्टार्थेयं त्रिसूत्री ।

इति श्रीवरदराजदीक्षितविरचितपाणिनीयलिङ्गानुशासनसारभूता लिङ्गानुशासनसूत्रवृत्तिः समाप्ता ॥



श्रीः ।

# मध्यकौमुदीस्थसूत्राणामकारादिवर्णक्रमः ।

अइउण् १ ऋलृक् २ एओङ् ३ ऐऔच् ४ हयवरट् ५ लण् ६ ञमङणनम् ७ झभञ् ८ घढधष् ९ जबगडदश् १० खफछठथचटतव् ११ कपय् १२ शषसर् १३ हल् १४ । इतिं माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि ।